नागकुमारे भासियुं, रक्खउ पारसनाथ । जः जः जः ताली ३ देवी, ( इति ) सर्पचौरमंत्रः । ह्रीँ पद्मे पद्मकटिनी नमः, हृदि स्ववस्त्र धृत्वा वार २१ अभिमंत्रयेत् । सर्पादिदुष्टकीटकभयं न भवति । अनेन मंत्रेण एक सहस्रवारं (जपित्वा) स्नापयेत्, तदा उदकं मध्ये दीयते शरीरे छंट्यते, तस्य सर्व स्थावरजंगमविषं याति । ह्रीँ जः जः जः सर्वज्वरं नाशय नाशय, अष्टोत्तरशत वारं अनेन मंत्रेण जप्यते, पानीयमध्ये एकं दीयते, वेलाज्वरं नाशयति । द्विदिने, एकान्तरज्वरं त्रिदिने, तृतीयज्वरं सप्तदिने । वातपित्तकफश्लेष्मसर्वज्वरं नाशयति । मयूरशिखा लज्जालु सहदेवी पुष्यार्के गृहित्वा यंत्राग्रे पूजयित्वा साधारण मंत्रेण १०८ वार पूजयेत् । मयूरशिखा मस्तके धार्यते । शाकिन्यादि द्रष्टिदोषं न स्यात् । सर्वरोगादि क्षुद्रदोषा यान्ति । कंठे लज्जालु ग्रहशान्त्यर्थं स्थापयेत् । कट्यां सहदेवी रोगोपद्रववश्यार्थं स्थाप्यते । यंत्राग्रे १०८ गुग्गलगुटिका साधारण मंत्रेण मंत्रयित्वा होमयेत् । सा रक्षा रोगिणो मध्ये दीयते, सर्वरोगक्षुद्रदोषा नश्यन्ति । भोजनानन्तरं वारत्रयं दक्षिणहस्तेनोदरं मंत्रयेत् ।

**ह्रीँ वातोऽपि भक्षितो येन, पीतो येन महोदधिः । समुद्रः रोषितो येन, तमगस्तिं प्रणम्यते ॥ १ ॥**

अनेनाभिमंत्रयेत् । परचक्रभये मुख्यनृपमुद्दिश्यैकरात्रौ पूर्वयुक्त्या पंचहवनं कार्यं । सा रक्षा च दिशानां मुखे उदकेन सार्द्धं दीयते । यंत्रद्वयं कृत्वा जयपताकायां आत्मकटकं उभयोः पार्श्वयोः स्थाप्यते, स वादित्रारावश्रवणेन पताकादर्शनेन एव परचक्रं नाशयति । यंत्राग्रे कंठप्रमाणगर्त्ता क्रियते रक्तपुष्प अनया युक्त्या दिनं प्रति सहस्रमेकं जपेत् । ह्रीँ अमुकं बंदि-मोक्षं कुरु कुरु । सप्तदिनैरेवं कृते बंदिमोक्षो भवति । मास १ बेडी छुटयति । १४ दिनकृते स हि त्रिमासधृत छुटयति ।

अथ वश्ययंत्रविधिः—पट्कोणयंत्र कीजै, पट्कोणे मायाबीजानि, मध्ये, साध्यं नामसहितं। इदं यंत्रं कुंकुम गौरोचन कस्तूरि काकनिष्टांगुलि रुधिरेण भूर्जे लिख्यते। जातिलेखिनीं कुमारिसूत्रेण वेष्टयेत्। पश्चात् परमेष्टि मुख्ययंत्राग्रे वार १०८ साधारणमंत्रेण अभिमंत्रयेत्। पंचमधु ताम्रेण मटाप्य घृतमधुसहितं समीपे स्थाप्यते, महावश्यं स्यात्। एकामन्यां युक्तिं वक्ष्यामि—मोक्षार्थं साधनाय पंचकोणयंत्रः क्रियते। इदं यंत्रं श्वेतोज्वलेन कागदेन पंचवर्ण पंचरूपो ह्रींकार पंचतत्त्वसहितो लिख्यते। मध्ये जिनमूर्त्तिं लिखेत्। परमेष्टिमुख्ययंत्राग्रे मुक्त्वा वार १०८ साधारण मंत्रेण अभिमंत्रयेत्, इति प्रतिष्ठा। पश्चात् दृष्टिं जिनस्योपरि कृत्वा अरिहंताणं इत्यादि पंचपदानि यो गुणयेत् लक्षमेकं सः तीर्थंकरगोत्रं बध्नाति, मुक्तिरुया वल्लभो भवति। सर्वपापरहितो भवति। अन्यपरिणाम तात्कालिक कविः।

अथ विशेषः कथ्यते—प्रथमं शुक्लबीजं कर्मक्षयार्थं कथ्यते—पंचपरमेष्टियंत्रं श्वेतवस्त्रस्योपरि मुच्यते, कर्पूरेणार्चयेत्। तस्योपरि स्वदृष्टिं स्थाप्य मानसेन कुंडलिनि उत्परि मायाबीजं स्थाप्य १०८ साधारण मंत्रेण बीजं जपेत्। अहोरात्रकृतं पापं याति। अनया युक्त्या त्रिदिनं शुक्लध्यानयुतो जपेत्। सहस्रमेकं। सकृत्जन्मपापं गच्छति। तथा भ्रूमध्ये ज्ञानदीपं कृत्वा तस्य मध्ये मायाबीजं जपेत्। एवं सप्तदिनानि यः करोति तस्य जन्मान्तरपापं गच्छति। अनया युक्त्वा त्रिदिनं सूर्यसमं बीजं नाभिमध्यजले जपेत् तस्य रविपीडा न स्यात् ॥ १ ॥ अनया युक्त्या द्वितीयचक्रे अष्टोत्तरशतजापमात्रेण शशिपीडा न भवति ॥ २ ॥ तृतीयचक्रे तप्तांगार सदृशं मायाबीजं १०८ जपेत्। भौमपीडा न भवति ॥ ३ ॥ चतुर्थचक्रे पाचिनिभंबीजं जपेत् १०८, बुधपीडा शान्तिः ॥ ४ ॥ पंचमचक्रे पुष्पराजनिभं बीजं जपेत् १०८, मासमात्रं, गुरुपीडा याति ॥ ५ ॥

षष्ठचक्रे मुक्ताफलनिभं १०८ जपेत्, शुक्रपीडा न स्यात् ॥ ६ ॥ भूमध्ये नीलकरत्ननिभं बीजं दिनप्रति त्रिकालं १०८ जपेत्, दिन ४९, तस्य शनिपीडा न स्यात् ॥ ७ ॥ अनया युक्त्या मालतिबकुलवैडुर्यनिभं मायाबीजं १०८ जपेत्, मासं यावत्, केतुपीडा न स्यात् ॥ ८ ॥

परमेष्ठिचक्रस्योपरि आकाशबीजं जपेत् १०८, एक दिने अन्नादि दोषदृष्टिं नाश-



॥ १४ ॥

यति । द्विदिने झौंटिकां पीडां नाशयति । त्रिदिने भूतपीडां नाशयति । चतुर्दिने डाकिनिपीडां नाशयति । पंचमदिने शाकिनिपीडां नाशयति । अनया युक्त्या दिन २१ समस्तोपद्रवा यान्ति । दिनप्रति १०८ जपेत्, महाकर्मणादि नश्यति ॥ तथा मालतिमुकुलाग्रे पंचवर्णबीजं स्थापयेत् । दिनप्रति मगहार मध्ये जपेत् यव रक्षित्वा दिनानि तस्य जडत्वं प्रयाति । महाबुद्धिवान् भवति । अनया युक्त्या मालतिकुसुमाग्रे पंचवर्णबीजं ध्यायेत् । दिनप्रति १०८ जपेत् । तस्य कवित्वबुद्धिः स्यात् । तेजस्वी प्रभा भवति । ॥ इति शुक्लध्यानविधि ॥ १ ॥

अथ रक्तबीजं वश्यार्थे । कुंकुमकेसरकर्पूरकस्तूरिं समभागं कृत्वा गुटिका क्रियते सा गुटिका संघृष्य मध्ये वार १०८ जपेत् कार्योत्पत्तौ । मंत्रेण साध्यनाम लिखित्वा तिलकं कारयेत् । यः पश्यति स वशी भवति । परमेष्टिचक्रे उत्तरस्यां धारयेत् । पूर्वयुक्त्या रक्तोपचारेण दिनप्रति कार्योत्पन्नमंत्रः—" ॐ ह्रीँ अमुकं वश्यं कुरु कुरु " सहस्रमेकं जपेत् साध्यनाम सहितं । सप्तदिनैः कृते राजा च मंत्री वशी भवति । षट्दिनै राजवनिता वशी भवति । पंचभिर्दिनै महाराज्यमान्यो भवति । चतुर्भिर्दिनै नागरिकलोकप्रमुखो वशी भवति । त्रिदिनैः स्त्रियो वशी भवति । द्वाभ्यां शत्रवो वशी भवन्ति । एकेन दिनेन गुरवो वशी भवन्ति ।

॥ **अथ आकर्षण विधिर्लिख्यते**— ॥ पूर्वयुक्त्या यंत्रास्याग्रे त्रिकोणकुंडं कृत्वा पूर्वरक्तोपचारेण कार्योत्पन्नमंत्रेण सप्तदिनानि हवनं क्रियते, महादेव्या आकर्षणं ( भवति )। षट्दिनहवनेन भूतप्रेतशाकिनी प्रमुखा गच्छन्ति । पंचदिनेन गणेशक्षेत्रपालचेटकादिनां कर्षयति चतुर्भिर्दिनैः योगिनीं आकर्षयति । त्रिभिर्दिनैः राजस्त्रिया आकर्पणं । द्विदिनेन प्रजाकुल-

स्त्रीणामाकर्षणं । एकदिन हवनेन कुमारिकां आकर्षयति ॥ इति वश्यार्थं रक्तबीजाधिकारः ॥ २ ॥

॥ अथ तृतीयबीजाधिकारः श्रेयोऽर्थं कथ्यते— ॥ पीतबीजपरमेष्ठियंत्रस्याग्रे ईशानदिशि सन्मुखं यंत्रं स्थापयेत्, पूर्वोक्तविधिना पीतजपमाला सहस्रं जपेत् । दिनप्रति त्रिकालं कार्योत्पन्ने स्वपनीव्रतस्थः पण्मासं जपेत्, तस्य श्रीलाभो भवति, जन्मदल ह्रीँ लक्ष्मीवान् । तस्य वंशे द्रारिद्र्यं न स्यात् । अनया युक्त्या मासत्रितयं जपेत्, राज्यप्राप्तिः स्यात् । द्विमासे मंत्रीभवति । पंचभिर्दिनै स्थापनमुक्तलक्ष्मी आगच्छति । त्रिभिर्दिनै गोत्रगत लक्ष्मी वृद्धिं प्राप्नोति । यंत्रस्याग्रे सहस्रमेकं १००० अक्षततंदूलकुंकुमगोरोचनै र्ये तंदूलाः पीताः कृताः । ( तै ) बीजमंत्रं पूजयेत् । यत्र निधिशंकास्थानं स्यात् तत्र क्षिप्यते, यत्र विवर्णतंदूला दृश्यन्ते तत्र निश्चितं निधिः । तथा यंत्रस्याग्रे कुंकुमादि पीतद्रव्यैः षट्कोणयंत्रं लिखेत् । षट् ह्रीँकार मध्ये, गर्भे शत्रुप्रतिकृतिः, तस्य हृदये बीजं, पादाधः स्तंभय परिधा स्तंभय २, इति पूजा । द्वारे कार्योत्पन्नमंत्रेण १०८ पूज्येत्, पीतपुष्पेन । अथ साधनमंत्रः—अंगुल ८ कीलकः शत्रुमुखे क्षेपयेत् । अनया युक्त्या राजानं सप्तदिनानि, मंत्रेण, षट् दिनानि दुर्गाधिपं, पंचदिनानि नगरमहत्तरं, चतुर्दिनानि त्रिदिनं सर्वास्त्रियः, एकाद्वाभ्यां सर्वे इतरलोकाः इति स्तंभयति ।

॥ इति पीतबीजाधिकारः ॥ ३ ॥

॥ अथ मायाबीजं नीलं उच्चाटनार्थं कथ्यते— ॥ परमेष्ठियंत्रं वायव्यदिशायां स्थाप्य पूर्वयुक्त्या नीलोपचारेण पूजयेत्। राजानां वा राजस्त्रियाणां कार्ये राजद्वारमृत्तिकामानीयते । प्रधानार्थे प्रधान ( द्वार ) मृत्तिकां । शेषाणां मनुष्याणां वामपादधूलिमानीयते । यंत्रस्याग्रे पट्टकोपरिमुच्यते । तन्मृत्तिकामध्ये बीजसहितं शत्रुनाम लिख्यते । अष्टोत्तरशतेन मंत्रेण

कार्ये (कार्योत्पन्ने) अभिमंत्रयेत् । पश्चादर्कदुग्धेन मृत्तिकापिंडं कृत्वा शत्रुमूर्त्तिः सावयवा लिखेत् । सा मूर्तिर्नीलोपचारेण धूप-दीपनैवेद्यसहितं अर्चयेत् । राजार्थे सप्तदिनानि अर्चयेत् । मंत्र्यर्थे षट्दिनानि । राजस्त्रियार्थे पंचदिनानि । दुर्गपालार्थे चतुर्दिनानि । अन्येषामर्थे त्रिदिनानि पूजयेत् । पश्चात् राज्ञः कार्ये तत्फलकं राजद्वारे निक्षिपेत् । मंत्रिणः कार्ये मंत्रिद्वारे । अन्येषां कार्ये तत्र निक्षिपेत् । यत्र ( यस्य ) साध्यपदेन तं परिमृशति तस्य महान् उद्वेगो भवति, महारोगादि पीडितो भवति । शान्त्यर्थं तां निष्कास्य खंडीकृत्वा कूपादौ क्षिप्यते उभयोर्मित्रविरोधार्थं । द्वे अर्कपत्रे आनीयते । परमेष्टियंत्रस्याग्रे मुक्त्वा नीलोपचारेण यंत्रं पूजयेत् । पश्चात् स्नुहिदुग्धेन द्वयोः पत्रयोः मूर्तिर्लिखेत् । पश्चात् । द्वे पत्रे एकत्र कृत्वा नीलोपचारेण पूजयेत् । सहस्रमेकं कार्योत्पन्नमंत्रेण मूर्तिमस्तके मायाबीजं । पादाधो द्वेषय द्वेषय इति लिखेत् । एकत्र कृत्वा सूत्रेण वेष्टयेत् । सहस्रजापेन पूजयेत् । पश्चात् पृथक् कृत्वा त्रिपथे क्षेपयेत्, महान् विरोधो भवति। उद्धृत्य च एकत्र कृत्वा शतपुष्पेन त्रिदिनं पूजयेत्, मा पुनरपि प्रीतिः स्यात् ॥

इति परमेष्टिचक्रे नीलबीजध्यानविधिः चतुर्थः ॥ ४ ॥

॥ अथ कृष्ण आकाश कृष्णआकाशतत्त्वबीजं कृष्णमारणार्थं कथ्यते–॥ मृत्युअर्थयोगे पलासपिप्पलौ यत्र एकत्र भवतः तत्र प्रथमदिने निमंत्र्य द्वितीयदिने नग्नीभूय च मौनी द्वयोरेकत्रमष्टखंडं द्वादशांगुलप्रमाणं गृह्यते । द्वादशांगुलदीर्घं षडंगुल पृथु त्र्यंगुलपिंडा पट्टिका कारयेत् । पश्चात् रवौ कुमारिका स्मशानात् कोयला समानीयंते । तानर्कदुग्धेन घर्षयेत् । अनया मष्या शत्रुप्रतिकृतिं पट्टिकोपरि लिखेत् । तस्य मूर्तिमस्तके ह्रीँकारं लिखेत् । उभयपार्श्वयोः द्वादश बीजानि लिख्यन्ते । पट्टिका-

पिंडे द्वयोः पार्श्वयोर्द्वादिश द्वादश, पृष्ठे द्वादश पट्टिकाया लिखेत्। तस्य चरणतले मारय मारय शब्दं लिखेत्। तां पट्टिकां मुख्ययंत्राग्रे सहस्रमेकं १००० दिनप्रति उत्पन्नकार्येण मंत्रेण जपेत् सदा दिनानि। पश्चात् स्मशानमध्ये यग्रते। पश्चात् दिनप्रति कर बे वारि भृत्वा मायाबीजसहितं मारय मारय शब्दं लिखेत्। इति मंत्रेण वार १०८ जपेत्। तत्पट्टिकोपरि सिंचयेत्। अनया युक्त्या २१ दिनानन्तरं रोगोत्पतिर्महती स्यात्। सन्निपातज्वरं भंगं वातपित्तश्लेष्मादिरोगा भवन्ति। एषा युक्ति चेत् एक मासं क्रियते तदा राज्ञो मरणं। मंत्रिणः पंचमासान्। दुर्गपालाय ४ मास। राजमान्या दूतपुरुषाः त्रयो मासाः। शेषाणां द्विमासौ कृष्णमारणं स्यात् ॥ शान्तिकं कथयामि—तं तु यंत्रं ततो निष्कास्य दुग्धेनाभिमंत्रयेत्। "ह्रीँ अमुकस्य शान्ति कुरु कुरु" वार १०८ जपेत्। तावद्भिर्दिनैः पुनरारोग्यं भवति।

श्री शक्तिना सोदरभावयुक्त्या, तं पापहं स्तौमि विधानद्रश्यं।
श्री खेचरीदत्तमहाप्रसादो, माया (याः) कल्पं विविधं चकार ॥ १ ॥
द्वितीय चतुर्थपदे, कविनामस्त्रगोपितं। सुसाधकेन सुध्यानं, कर्तव्यं कर्म्मनाशनं ॥ २ ॥

ऑँ नमो अरिहंताणं। ऑँ नमो सिद्धाणं। ऑँ नमो आयरियाणं। ऑँ नमो उवज्झायाणं। ऑँ नमो लोए सवसाहूणं। अँ इँ ऑँ नमो भगवइए सुयदेवयाए बारसांगजणणीए सरस्सइए सच्चवाइणीए सुवन्नवन्नो कुरयर। २।. देवी मे शरीरं पविस्स पुच्छतस्स संमुहं पविस्स, सवजणमयहरिए, अरिहंतसिरिए, सम्यग्दर्शनचारित्राणां [ सम्यग्दर्शनज्ञानचारित्राणि ]

मोक्षमार्गः, एषा मयूरवाहिनीविद्या ३६००० पर्युषणा पर्वणि दीपाल्यां चतुर्मासेषु साधनीया वश्यं स्यात् ।

॥ इति श्री मायाबीजकल्पः संपूर्णः ॥

॥ अथ होम विधिर्लिख्यते— ॥ चतुरस्रकुंड बे हस्तप्रमाण कीजै, खदिरकाष्टनी अग्नि प्रगट कीजै, रक्त कणयर घृत मधुयुक्त एक सहस्र जेहने नाम होमिए, ते काष्ट न हुइ तो न थाय दासप्राय । ह्रीँ स्वाहाः अतितिलयवमधुघृतयुक्तं सहस्र १००० आहुति दीजै, तदा सरीर सुख हुवे, सरीरे उद्वेग न हुवै, । ते ह्रीँकार दहिं खांड मधु सुधो होमिए, विस्फोटक न होइ । तथा तिल मुंग उडद घृत सहस्रं, होमिए, गृहशान्तिर्भवति । तिलतेल मपान् मिश्रं कृत्वा पलाशकाष्ट होमयेत्, परचक्रं नाशयति । ते ह्रीँकार लवण राइ होमिए, पातालकन्यां आकर्षयेत् । कडवो तेल निंबपत्र होमिए सहस्र १, शत्रुनें ज्वर चढे ।

॥ इति होम विधि समाप्तः ॥

॥ ह्रीँकारविधानं कहै छै—॥ श्रीखंडचंदनेन कर्पूरमृगमदगोरोचनकेसरकुंकुमआरक्त कुसुम भागान् शुभदिने भुर्जपत्रे लिखिन्या ह्रीँकारं अष्टदलकमलमध्ये लिखित्वा तस्य मध्ये साध्यनाम अर्कपत्रे हलिद्रै लिंखित्वा अगयानी लेखणे लखिये, स्मशान गाडीयै, । जेहने नामे लिखिए तेहनी कार्यसिद्धि स्तंभन हुइ । निश्चै तां लगि स्थंभै जा क्षीरेण प्रक्षालयेत् ।, स्वस्थ हुवै ॥ ह्रीँकारविधानं—निंबना पाटीया बे, करावी काकपिच्छ लेखण करी, अश्वमहिषरक्तेन जे बिहुंने प्रीत हुइ तेहनो नाम लिखिए । पाखति रेखा त्रण करीए । पाटला संपुट भूमि मध्ये क्षेपिए, तु दिने वैरं भवति । वली विणजाणिते बिहुं पाटीया उपर ह्रीँकारं वेष्टय अग्नि समीपे दाटीए, ते बिहुने आदित्यवारे, तदा तयोर्विरोधो भवति, यावन्महिपिक्षीरेण चंदनेन

प्रक्षाल्यते ॥ ह्रींकारविधानं—स्मशानांगार खदिरकाष्टनो चउरंस आठ अंगुलप्रमाण एकेकी दिसे आठ आठ ह्रींकार लिखिये, । सर्वावयवसंयुक्तकृतां ह खीली कष्टंग खीलीए शत्रु खीलाय, मूर्छा पामे, विह्वल थाइ, संदेह उत्किलिते स्वस्थो भवति न संशयः

॥ इति ह्रींकारकल्पः ॥

लक्षजाप दशांगहोम अखंड चोखा वाटिये घृत मधु साकार ची जेवडी गोली सहस्र १ होमिये । पछे द्राख १, गीरी १, खंड १०८, खारेक १०८ बदाम १०८, घृत चौपडी होमिये । नालिकेरखंड १०८ आहुति दीजे ॥ इति श्री ह्रीं बीज साधन विधि ॥ प्रथम दिवालीने दिन उपवास करी रक्तवस्त्र पहेरिजैटां १।२ केसर घसी पूर्वदिसि बेसिए । जिण पाटले लोह नहि लागो होइ तिण पाटै बेसिये, पवित्रपणै थइ सोनारा पाणीको छांटो लेइ १२ अंगुलिनी लेखण अथवा डाभरी लेखणसुं थालि उपरि ह्रींकार गुरुविध युक्तो यंत्र लिखिये, च्यारे अक्षरसहित " ॐ क्रौं नमः " कर्पूरसुं लिखै कहिं लोह न राखै, मौनेन बाजोट उपर थाली मेलिये । संध्यावेला २–३ कर्पूरना वासक्षेप करी भला वस्त्रसुं ढांकियै । एतला वस्त्र विहार करी सांझै कीजै, पछे संध्यावेला रक्त वस्त्र पहैरी सन्मुख बेसी निश्चल थाय । आगै त्रिकोणकुंड करी अग्निमांहे खेपियै । " ॐ तेत्रीसक्रोड देवतामुखाय स्वाहाः " अनेनाग्निस्थापनं । पछे " खाडदेवतामुखाय स्वाहाः " अनेनाग्निस्थापनं । पछी खारेक ३ घृतसुं चोपडी वार ३ ह्रींकारसुं मंत्री मंत्री होमीयै । सोपारीखंड ३ साकर द्राखकदलीना खंड ३–३ होमियै । पछे रक्तमाला ३ फेरी टोइये । पछे यंत्र आगल सहस्र वार १२००० ॐ ह्रीं नमः गुणियै । नानाविध फुलफल नैवेद्यकर्पूरादि सुगंधद्रव्यै पूजै । दसांस हवनं खीर मेवा पंचामृत आहुति दीजै । पछे प्रांते यंत्रने पुटी १ माला १ जमी

भोगकरी दूध सेर १ पवित्रपणे घालि पखाल स्त्र पीत्वा गृहादिक मांडै पाणी पखाली छांटीये श्रेयमणी फलादिक खाय वा जावज्जीव दीवालीये ए विधि करिये। आम्नाय कुपात्रने न दीजै गुरुभक्तने दीजै आपदा टालै, मनोवांछित देवै, भवांत-गतिसुख लहै ॥

॥ इति श्री जिनदत्तसूरिजी प्रातःस्मरणा समाप्ता ॥

ह्रीँ लेखाकल्प लिख्यते—कृष्णाष्टम्यां अथवा चतुर्दश्यां उपवासः। पार्श्वनाथप्रतिमाग्रे याम्यदिशायां पद्मासनेनोपविश्य द्वादशसहस्रं जपेत्। पुरश्चरणो भवति। पछि त्रिसंध्यं अष्टशतं जपेत्। सप्तभिर्दिनै गंथ शतत्रयं गृह्णाति। उदकं सप्ताभिमंत्रितं अकाकोद्री षण्मासान् पिवेत्। सः कविर्भवति। सर्व शास्त्राणां वेत्ता भवति। सततं जप्तेन सर्वजनप्रियो भवति। मुद्रामंजलिं बद्धा जपेत्, चौरो बद्धो भवति, व्याघ्रादिभयो न भवति। स्मरणादेव देवात्प्रसिद्धिः वधो रुद्रो वा जपेत् प्रसीदति। राजकुलं वा प्रविशत् जपेत्, राजप्रियो भवति। अजारक्तेन मनुष्यकपाले माध्यं लिख्य अग्नौ तापयेत्, तत्क्षणात् शत्रुं जयति। दर्भपिष्टकेन पुत्तलिकां कृत्वा मदनकंटके (न) सर्वांगं विध इत्वा (विध्य) मध्ये खदिर लोहशिलाकया तापयेत् स वशी भवति। अलक्तेनांगुष्टं लिख्या अखंडमादर्शयो वां त्रिशूलहस्ता देवी अवतीर्णा पश्यति वा देविं वा। अन्येऽपि दारक दारि-काणां च सप्ताभिमंत्रीकृत्वा खड्गादर्शे दर्शयेत्, सर्वेपि पश्यन्ति यदेव नष्टं द्रव्यं, तत्रैव पश्यन्ति, येनाऽपि हृतं सोऽपि तत्रैव नीव व नीलवस्त्रां स्त्रियं पश्यति। रक्तांबरधरो वचबंधी स्त्री पुरुषयो यदि पश्यंति तदा सप्तरात्रेण मृत्युर्भवति। यत्किंचित् विधिविपरितं तत् सर्व दुःखाय।

पुष्पं छत्रं ध्वजं चैव, कलशं खड्गमेव च । पद्मं च बृषभं चैव, शुभान्येतानि लक्षयेत् ॥ १ ॥

सर्व कर्म करी ह्रीं लेखा नाम उदकं सदा वारान् दृष्टिं निवारयति । तर्जनिमेकविंशतिवारान् जप्त्वा शत्रुं तर्जयेत्, स्तंभो भवति । उदकपूर्णं घटं सप्ताभिमंत्रितं कृत्वा भाजनावेशं करोति, कुमारकुमारिकाणां वावेशं करोति । शौंडिकगृहात्सप्त तृणानि गृहित्वा अनेनाभिमंत्र्य चतुःपथे निखनेत्, सर्व नगरेषु शौंभिकाणामुरा विनश्यंति । काकमाचीकुसुमष्टरात्राभिमंत्रे कृत्वा सशाने निखनेत्, रात्रौ स्वपति कश्चित् बुध्यते सर्वेषां उद्धृते मोक्षः । यमुद्दिश्य काकपक्ष्यान् जुहोमिएतमुच्चाटयति, निंबपत्राणि जुहोमि यैः पिशाचेन गृह्यते । पुष्पमभिमंत्र्य ग्रहगृहीतस्य दर्शयेत्, पुष्पमाघ्राय गच्छन्ति । यंत्रशस्त्रं च स्तंभयति । आकाशात्पक्षिणं च पातयति । दंशमसकमत्कुणानां दंष्ट्रानां बाधं करोति । भस्मवालुकयाभिमंत्रितया नदीतीरेऽष्टशतं जपेत्, तां प्रक्षिप्य नदीं स्तंभयति । अन्नं सप्ताभिमंत्रितं भक्षयेत्, दिनेश्रीर्भवति । कंठमात्रमुदकमवतीर्याष्टसहस्रं जपेत्, कन्यामाकर्षयति । जलमध्ये रविबिंबं पश्यन् कणवीरशष्टकं जुहूयात्, वस्त्राणि लभते । यद्वर्णानि वस्त्राणि पुष्पाणि तद्वर्णानि वस्त्राणि । अर्धरात्रौ स्मशानं गत्वा स्वरुधिरेण रक्तानां निंब समिधा अष्टसहस्र जुहुयात् दह्यमानाऽसुरकन्या निर्गच्छति ताश्च बिलं प्रवेशयंति ताभिः सह क्रीडयेत् । न्यग्रोध अधो उपविश्य अष्टसहस्रं ८००० जपेत्, यक्षणी आयाति, स चात्मनः भक्तं दत्ते सपरिवारस्य । शंकर जटाजूटस्योपरि उपविष्टः त्रिसंध्यं अष्टशतं जपेत्, एकादि पणादि लभ्यते द्रव्यश्च तस्य कार्य अन्नं सप्ताभिमंत्रितं कृत्वा देव दक्षिणमूर्तौ स्थापयेत्, अक्षयं भवति । एषा विद्या कर्मकरी अप्रतिहतपरा क्रमानागान् स्तंभयति, सुरान् मोहयति,

वाक्यहारं करोति । योजनसातमपि गत्व कटिं सप्ताभिमंत्रितं कृत्वा श्रमं व्यपोहति।एषा विद्या सिध्यति जिनभक्तिपरायणस्य ॥
इति श्री ह्रीँ लेखाकल्पः समाप्तः ॥

॥ अथ मायाकल्पो लिख्यते—॥ शुक्लपक्ष ५–१०–१५ पूर्णातिथि बीजै, शुद्ध चंद्रबल, नैवेद्य पंचामृत फल वस्त्र इत्यादि लेइ, स्नानं ब्रह्मचर्य, एक भोज्य सुखडलेपन करी श्वेत धान्य मोक्षहेतु इत्यादि फलं। मायाबीज मंत्रः—" ॐ ह्रीँ नमः " मूलमंत्र लक्ष १००००० जपी जै । श्वेतरक्त पीत नील कृष्ण इत्यादि वस्त्र जपमाला धान्य पूजा तेहवुं करीयै । श्वेते मुक्ति, रक्ते वशी, पीते लक्ष्मी, नीले कृष्णे मारणं इत्यादि लक्ष जपायै दशांश होम करीयै तो राज्य पामै, रणे राजकुल दुर्ग संकट कामे १०८ जपी कणवीरपुष्प १०८, गुगलगोली १०८, होमीयै, कार्यसिद्धि पामै । पर्वणि ग्रहणे विशेष होम कीजै ॥ अथ पुरश्चरणविधिः—कुमारी कन्याने स्नान करावी भलां वस्त्र पहिावीजै । उभाणै पगां कोरे घडे पाणी भरी अणावीये । " ॐ प्रॉँ प्रौँ पूप्रः अमले विमले अशुचि शुचि भवामि स्वाहाः " स्नान कीजै । भूमिशुद्धिः—ॐ भूरिसि भूधात्रीरियं विश्वाधारे नमः इति शुद्धिः । रक्तकुसुंभा वस्त्र पहरी पाटला लोंगसहित शुद्ध यासै पाटै बेसियै, अंकाबले बेसियै। ताम्रपत्रोपरि ह्रीँकार पंचांगुलप्रमाण लिखावीए। कपूर अगर यक्ष कर्दम तिणै विलेपन करी सेवंत्री चंपा जाय सुखड तिणै १०८ वार पूजियै, नैवेद्य धूप दीप खेवींयै । सोपारी १ नालियर ५ ढोइयै, पछे होमविधि करीयै । टाणै महुंलि देइ ते उपर चउखूणीयो त्रिकोणीयो कुंड करीयै । अष्टदल करीयै खेजडीनी समिधं । ॐ वागच्धस्तनूनपावरद एहि एहि आगच्छ आगच्छ हं फट् इणे मंत्रे अग्नि थापीयै । खीर नालेर द्राख अगर सुखड केसर साकर लवंग घृत मेली प्रथम गुगल

कणेर घृतसु होमियै,

**शान्तिकं पौष्टिकं चैव, वश्यमाकषर्णं तथा । उच्चाटनं स्तंभनं चैव, सर्वकार्याणि साधयेत् ॥ १ ॥**

इत्यादि चीजो सर्व होमियै । पछे विसर्जन मंत्र भणिये—" ॐ ह्रीं फुट् स्वस्थानं गम्यतां गम्यतां " इति मंत्र भणीये—

**आज्ञाहीनं क्रियाहीनं, मंत्रहीनं च यत्कृतं । तत्सर्वं क्षम्यतां देवि !, प्रसीद परमेश्वरि ! ॥ १ ॥**

खमावीयै विसर्जन करीयै । यदा ह्रींकार प्रारंभीयै तदा भला गुरु होइ, अथवा सूरिमंत्रधारीनो हाथ मस्तके मूकावीयै । तेहनै खीरोदका गदीयाणा २ नी मुद्रा आपीयै । यथाशक्ति सारुं पूर्वोक्त विधिरो ध्यान मांडीयै । लक्ष एक जपीयै जाप, पछे सिद्ध हुवै ॥ इति श्री मायाबीज कल्पः श्रीखरतरगच्छाधीश भट्टारक श्री जिनप्रभसूरिविरचितः समाप्तः ॥श्री शुभं भवतु॥ कल्याणमस्तु ॥ श्रीरस्तु ॥

## ॥ श्री बृहद्ह्रींकार कल्पः ॥

॥ श्री सर्वज्ञाय नमः ॥ ॐ ह्रीं नमो जिणाणं । ॐ नमो अणंतोहिं जिणाणं । ॐ नमो अणंताणंतोहिजिणाणं । ॐ नमो सामन्नकेवलीणं । ॐ नमो भवत्थकेवलीणं । ॐ नमो अभवत्थकेवलीणं । ॐ नमो चउदसपुवीणं । ॐ नमो दस-पुवीणं । ॐ नमो एक्कारसंगीणं । एएसिं सवेसिं णमो । कायिकवाङ्मयो विधा पवज्जामि । समविधा पसिज्जउ । ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स । ॐ वग्गु वग्गु निवग्गु निवग्गु सोमे सोमनसे महुरे इरिकाली किरिकाली गिरिकाली

पिरिकाली सिरिकाली हिरिकाली आयरियकाली । ॐ इरियाए किरियाए आयरियाए काली काली महाकाली, सिरि सिरिकाली, हिरिहिरिकाली, आयरिय आयरियकाली । ॐ ह्रीँ श्रीँ इरिमेरु किरिमेरु गिरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरिअमेरु। ह्रीँ नमः सर्वभयेभ्यो रक्षां ऋद्धिं वृद्धिं सौभाग्यं च कुरु कुरु स्वाहा । तथा च मंत्राधिराजस्तवे श्रीगुणशेखर सूरयः प्रोचुः—

न पार्श्वादपरो मंत्रो, न मंत्रादपरो विभुः । तद्ध्यादपरो नात्मा, ध्यायेन्नित्येकताननतां ॥ १ ॥

आत्मा पार्श्वात्मकः पार्श्वो, मंत्रात्पातौ तदात्मकौ एकद्वित्रि....प्येके--नेति तल्लयमावहेत् ॥ २ ॥

श्री जिनदत्तसूरिनी प्रभाते स्मरणा—पढम पणव माया मज्जारनमण अंतरा वन्नचियार जो समरइ, इण दिन सुभाव सवसिद्धि । तसु परिणय आवभूय पेयडायण गणडैर । सयल दुट्ठजणमन थरहरै । विज्जा एह समरंतह लोय भमहदीस पुहवी सर होय ॥ २ ॥

उप्पज्जए वा विगमए वा, धुवए वा जिनोदितां । त्रिपदी द्वादशांग्याश्च, मूलं मायेश्वरी मता ॥ १ ॥

आधारं तु गुदे चक्रं, स्वाधिष्ठानां नुवो फादि । मणिपूरँ तथा नाभौ, हृदि भुकमनांहतं ॥ २ ॥

कंठे विशुद्धिचक्रं च, आज्ञाचक्रं तु मस्तके । षडैतानि नु चक्राणि, परिज्ञेयानि योगिभिः ॥ ३ ॥

आधारादिकसू आज्ञा च लिंगे चक्र सूधा, ब्रह्मा विष्णु रुद्र इश्वर सदाशिव ए पांच पृथ्यादिकपरा स्वामी छै । आज्ञा-

चक्रमें मनरोवासो छे. ।

कुंडलिनि जंगाकृति--रेखां चितह शिवः शत्रुप्राणः । तच्छक्ति दीर्घकला, माया तद्वेष्टि तं जगद्वश्यं ॥ १ ॥

नाभौ हृदये कंठे, आज्ञाचक्रे च योनि मध्ये च । सिंदूरारुणमाया,--बीजध्यानात् जगद्वश्यं ॥ २ ॥

ॐ ह्रीँ श्रीँ क्लीँ क्लूँ एकाक्षराय भगवति विश्वरुपाय सर्वयोगिविश्वयुगेश्वराय त्रैलोक्यनाथाय सर्वकामप्रदाम नमः द्विजटी चतुर्जटी ॥

**इति बृहद्ह्रीँकारकल्प आम्नायः समाप्तः**

॥ णमो सिरिविजयमोहणसूरीणं ॥

# ॥ अथ वर्धमानविद्या कल्पः ॥

॥ श्रीजिनप्रभसूरिविरचित वर्धमान विद्या स्तवनम् ॥

॥ अर्हं ॥ आसि किलङ्कुत्तरसय, पयविन्नासो हुइज्ज पीढंमि। तत्तो उद्धरियाओ, वायगसिरिचंदसेणेणं १
चउवीसाइ जिणाणं, विज्जा एतासु जा चरमविज्जा । सा वद्धमाणविज्जा, भन्नइ तस्सा थुवं काउं २
पण परमिट्ठिपयाइं, चत्तारिय थुयपयाइ घित्तूणं । उवझाय कररन्ना, जा विहिया....अवयरे हिं ३
जा विविह मंडलुद्धार वाइणा साहुणा फल विसेसा। दिप्पंति संपयाओ, जे से जिणपवयणे बहवे ४
कल्लाणएसु पंचेसु वीरसामिणो कयविसेसतवविहिणो । आराहयंति रिसिणो, हत्थुतराइनखत्तेसु ५
उववासमयणतेरसि, दिणंमि अडाहियसहस्सजावेणं। बारससहस्सजावे, सिज्झइ जो वीरकल्लाणे ६
गरुडक्खए हिंसइवत्तणहं अडसयमीएहि पत्तेहिं । जविउण ते सत्तादिणे, पडोवरिं वीरबिंबे वा ७

तदुभय चुन्नविमस्सिय,वासक्खेवे कयंमि खीरदुमे। जा सिज्झइ ता वासा सिरिखित्ता निरुवसग्गकरा ८
जं सिरिऊण सिरं निव पूइयसेहग्गमाइया तासिं। दीहाइ साइणिसमं, सुगइंच भवंतरे लहइ ॥ ९ ॥
अणुओग गणाणट्ठा, वयजोगपइट्ठ अत्थसत्थेसु। जीए वासक्खेवो, गुरुहिं किरइ अविग्घट्ठं ॥ १० ॥
अक्खयवासजलेहिं, जीए अरिसंभयं हरइ दोसं। भवियाण कुणइ ऋद्धिं, आरोग्गं तहय वसकरणं ११
जा वद्धमाणविज्जा, निरविज्जा भगवओ य सिज्झाओ। मे कम्मखयस्स परमोहेउ, इहलोइयफलाय १२
अक्खीण बीय कुट्ठे य विवाय नृजय सामिणिआ एसा। संपावइ भत्ताणं, विहिणा जविया इमा विज्जा १३
एयाइं विज्जाइं, पभावओ एण जस्स करि भव्वो। अणिगइ कल्लाणसुहं, निरथारपारगाहोउ ॥१४॥
पणवं हरियं तत्तं, रत्तं कणयप्पहे य बियपएसे। तं सुक्कज्झाणेणं, झायइ जो तस्स वरऋद्धी ॥१५॥
जविऊण इमं विज्जं, वारे इगवीस सम्ममवियन्नो। जो खलु पविसइ गामं कज्जं से सोहणं होइ ॥१६॥
इय वद्धमाणविज्जा, थवणं जो पढइ पइ पभाइ मणं। सो हवइ जिणप्पहमइ, मंगलकल्लाण आवासो १७

॥ इति वर्धमान विद्या स्तवनम् ॥

## ॥ वाचकचन्द्रसेनोद्धृतवर्धमानविद्याकल्पः ॥

॥ श्री गुरुभ्यो नमः ॥ उपाध्यायवाचनाचार्ययोरप्येवं देवतावसरे भूशुद्धिः १ । पंच शून्य करांगुलिन्यासः २ । स्नानं ३ । कल्मपदहनं ४ । हृच्छुद्धिः ५ । करद्वयांगुलयर्हदादिन्यासः ६ । हृत्कंठतालुभ्रूमध्य ब्रह्मरन्ध्र शून्यपंचकन्यासः ७ । कुरु कुल्ला रक्षा ८ । भूतसकलीक्रमोत्क्रम सामान्यार्घ्यान् विधाय ९ । मंडलोद्घाटनं पदनिश्चलीकरणं १० । गर्भादारभ्य मंडल-पूजां च कृत्वा आवाहनादि पंचकं स्वमुद्राभिः कुर्यात् । ॐ ह्रीँ नमोऽस्तु भगवन् वर्धमानस्वामिन् एह्येहि संवोषट् इत्यादि पंचस्वपि ज्ञेयं । अमृतमुद्रया स्नपयित्वा सजीवतापदनं, हृतकमलावतारणं, पूर्ववत् गंधादिग्रहणं, च सौभाग्यादि मुद्रा पंचकं दर्शयित्वा जाप १०८ । ॐ हरितवर्णं ललाटे, ह्रीँ रक्तवर्णं वश्यार्थे, वीर वीर इत्यादि बीजानि कनकपीतध्यानेन । शेषं श्वेत-ध्यानेति जप्यंते, अस्त्रमुद्रया क्षोभणं। श्लोकः । पाठः संहार मुद्रया, " ॐ ह्रीँ नमोऽस्तु भगवन् वर्धमान स्वामिन् पुनरत्रमागम-नाय स्वस्थानं गच्छ गच्छ " यः इति सुषुम्णया प्रत्यानयनं, मेरुलंघनं, भ्रूकंपं, ओष्ठचालनं, दंतविवृतिं वर्जयेत्, इति उपा-ध्यायवाचनाचार्यमहत्तरा प्रवर्तिनीनां नित्यकृत्यं । तत्र भूमिशुद्धिः ॐ भूरसि भूतधात्री सर्वभूतहिते भूमिशुद्धिं कुरु कुरु स्वाहाः विसृष्ट्या वासक्षेपः १ । ॐ वास्तिप्र ॐ ह्रीँ ह्रीँ ह्रूँ ह्रैँ ह्रः अंगुष्टादिषु वामकरे न्यासः २ । ॐ अमले विमले सर्व तीर्थ जले पः पः पां पां वां वां अशुचिर्शुचिर्भवामि स्वाहाः " अंजलौ सर्वतीर्थोदकं संकल्प ललाटादारभ्य पादतलं यावत् स्नायात् ३ । ॐ विद्युत्फुलिंगे महाविद्ये सर्वं कल्मषं दह दह स्वाहाः " भुजमध्यस्पर्शस्त्रिः ४ । ॐ विमलाय विमलचित्ताय ज्वीँ क्ष्वीँ स्वाहा " हृच्छुद्धि वामहस्तः ५ । नमो अरिहंताणं अंगुष्टयोः, नमो सिद्धाणं तर्जन्योः, नमो आयरियाणं मध्यमयोः, नमो

उवज्झायाणं अनामिकयोः, नमो लोए सवसाहूणं कनिष्टयोः ६। ह्राँ हृदये, ह्रीँ कंठे, ह्रुँ तालुनि, ह्रैँ भ्रूमध्ये, ह्रौँ दशमद्वारे, वामकरेण सकृत् ।७। ॐ ललाटे, कुवामस्कंधे, रु वामपार्श्वे, कु वामचरणे, ले दक्षिणपादे, स्वा दक्षिणकुक्षौ, हा दक्षिणस्कंधे, ततो वैपरित्येन हास्वा ले कुरु कुरु ॐ वामकरेण ।८। क्षिप ॐ स्वाहा । क्षि पीतवर्णं पादयोः, ५ श्वेतवर्णं नाभौ, ॐ रक्तवर्णं हृदि, नीलवर्णं मुखे, हा ललाटे कृष्णवर्णं ततो वैपरित्येन स्वाहा ॐ पक्षि, इति पृथ्व्यप्तेजोवाय्वाकाशभूतैः सकलीकरणं ।९।

ॐ ॐ नमः सामान्यार्थः संवृतपटपूजा वासैः । "ॐ ह्रीँ नमोस्तु भगवन् वर्धमानस्वामिन् एह्येहिसंवौषट्" आवाहित्वा । १ । ॐ ह्रीँ नमोस्तु० तिष्ठ तिष्ठ ठः ठः स्थापन्या । २ । ॐ ह्रीँ नमोस्तु० मम सन्निहितो भव वषट् सन्निधान्या । ३ । ॐ ह्रीँ नमोऽस्तु पूजान्तं यावदत्रैव स्थातव्यं, सन्निरोधमुद्रया । ४ । ॐ ह्रीँ नमोस्तु० परेषामदृश्यो भव, अवगुंठिन्या । ५ । ॐ ह्रीँ नमोस्तु० गंधादिन् गृह्ण गृह्ण नमः पूजा । ६ ।

**सोहग्गयपरमिट्ठी, पवयणसुरहिं कयंजलिं झाणे । मुद्दापंचगमेयं, कायवं सवकालंमि ॥ १ ॥**

ततो जाप १०८,

**ॐ आज्ञाहीनं क्रियाहीनं, मंत्रहीनं च यत्कृतं । तत्सर्वं कृपया देव, क्षमस्व परमेश्वर ॥ १ ॥**

पवित्री मूलस्थापितां गुष्टांजलिरावाहनमुद्रा १, सैवाधोमुखी स्थापनी २, उर्ध्वांगुष्टे मुष्टिमिलिते सन्निधानी ३, अभ्यन्तरांगुष्टे मुष्टिमिलिते सन्निरोधमुद्रा ४, मुष्टिं बध्वा प्रसारितर्जनिकामध्यमो परिनिवेशितां गुष्टाऽवगुंठिनी ५, ततश्छोटिका

विघ्नत्रासनार्थं । ६ ।

अथ तृतीयपीठसूचितो वज्रस्वामिकृतो वर्धमानविद्याकल्पः प्रकाश्यते—प्रथम देवतावसरविधिः ।

ॐ ह्रीँ अर्हं ह्रूं ह्रः ह्रौँ नमो वर्धमानस्वामिने स्वाहाः। ॐ वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जए विजए-जयंते अ पराजीए सवट्ठसिद्धे, निव्वुए महाणसे महाबले स्वाहा मंत्र विद्या च उभयोर्मिश्रितयोर्जापः १२०००, पूर्वसेवा ततः सिद्धो भवति। चतुर्थोपवासेन सौभाग्यमुद्रया जापः । मदनत्रयोदश्यामुपोष्य अक्षतैः पुष्पैर्वाजापः १००८ अप्पंथ इति वा साधना वार १०८ दिनं प्रति ध्यानं कर्तव्यं, बोटितमन्नं न भोक्तव्यं, उच्छिष्टेषु रक्षणीया, वासनिक्षेपः पटे सदा-कार्यः, सर्वकर्मकरोमंत्रः, क्षुल्लकक्षुल्लिकादिक्षोभनार्थं प्रतिपादादिषु स्थापना, प्रतिष्टोपस्थापन बासनिक्षेपादिक्रिया अनेन क्रियते ॥ १ ॥

अर्हं ॐ ह्रीँ ह्रूँ ह्रः ह्रौँ वर्धनानस्वामिने स्वाहा ॐ वीरे वीरे इत्यादि भणनीया, पुस्तक समर्थनादिकं कार्यं । २ । तथा ह्रीँ अर्हं ॐ ह्रूँ ह्रः ह्रौँ नमो वर्धमानस्वामिने स्वाहा, ॐ वीरे वीरे विद्या भणनीया, इयति निवृत्तिकार्यादि कार्यं । ३ । ॐ ह्रीँ अर्हं ह्रूं ह्रः ह्रौँ वर्धमानस्वामिने स्वाहा ॐ वीरे वीरे इत्यादि भणनीया, जनाकर्षणविषये ध्यातव्यं । ४ । तथा ह्रीँ ॐ अर्हं ह्रं ह्रूँ ह्रूँ ह्रः ह्रौँ वर्धमानस्वामिने स्वाहा ॐ वीरे वीरे इत्यादि विद्या भणनीया, सौभाग्यार्थं ध्यातव्यं । ५ ।
ॐ ह्रीँ क्षुं वीराय स्वाहा ।

पंच परमिट्ठिमुद्दा, सुरहिसोहग्ग रुडगभनवआ य । मुग्गरक्खरा य सत्त य, एया अरक्खयपयाणंमि ॥१॥

अक्षताऽभिमंत्रणीया अगच्छता रोगिणां वा क्षेमं वश्यं च । ६ । ॐ अर्हं जये स्वाहा, जयादिकं क्रियते । ७ । ॐ ह्रीँ विजये विजयं मम कुरु कुरु स्वाहा, विजया विद्या । ८ । ॐ ह्रीँ अपराजितायै ॐ ह्रीँ अपराजितत्वं कुरु कुरु स्वाहा, अपराजिता विद्या । ९ । ॐ ह्रीँ जयंते स्वाहा, अनया जयादिकं । १० । विद्याचतुष्टयं, जयं स्वदेशे, विजयः परदेशे, अपराजितत्वं तीर्थश्रुतसंघप्रत्यनीकमध्ये वीरकल्याणकेषु साध्यते, इदं विद्याचतुष्टयं । ॐ नमो अरिहंताणं ह्राँ हृदये । ॐ नमो सिद्धाणं ह्रीँ शिरसि । ॐ नमो आयरियाणं ह्रूँ शिखायां । ॐ नमो उवज्झायाणं ह्रैँ कवचं । ॐ नमो सव्वससाहूणं ह्रः अस्त्रं आत्मरक्षां ॥ इति श्री वर्धमान विद्या संप्रदायः ॥

ॐ ह्रीँ अर्हं नमोजिणाणं, ॐ ह्रीँ नमो ओहिजिणाणं, ॐ ह्रीँ नमो सव्वोहिजिणाणं, ॐ ह्रीँ नमो परमोहिजिणाणं, ( ॐ ह्रीँ नमो ) अणंतोहिजिणाणं; ॐ ह्रीँ नमो कुट्ठबुद्धीणं, ॐ ह्रीँ नमो पयाणुसारीणं, ॐ ह्रीँ नमो संभिन्नसोइणं ॐ ह्रीँ नमो चउदसपूवीणं, ॐ ह्रीँ नमो अट्ठंगनिमित्तमहाकुसलाणं ॐ ह्रीँ नमो विउव्वणाइड्ढिपत्ताणं, ॐ ह्रीँ नमो विज्जाहराणं, ॐ ह्रीँ नमो पन्नसमणाणं, ॐ ह्रीँ नमो आगासगामीणं, । ॐ ह्रीँ ह्रैँ ह्रौँ ह्रैँ स्वाहा ॥ ॐ ह्रीँ श्रीँ ह्रीँ धृति कीर्ति बुद्धि लक्ष्मी स्वाहा ॥ द्वितीया वर्धमानविद्या ॥

पूर्व सेवा जाप १२००० शयनकाले हस्तपादौ प्रक्षाल्य कर्पूरश्रीखंडाभ्यां अंगं विलिप्य एकान्ते संस्तारके स्थित्वा वार १०८ कर्णे जपित्वा मौनिना कार्यं चिंतयित्वा शयनीयं, स्वप्ने शुभाशुभं दृश्यते ॥ ११ ॥ ॐ नमो भगवओ अरहओ महइ

महावीर सामिस्स सिज्झउमे भगवइ महइ महाविज्जा, ॐ वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे महानंदणे सिद्धे सिद्धस्वरे सिद्धवीए अणहिये नायघोसे सारवन्नं घोससारे परमे परमसुहगे जए विजए जयंते अपराजिए सव्वन्नु परमपयत्ते स्वाहा ॥ तृतीया वर्धमानविद्या ॥

एयाए विज्जाए समणसमणी निक्खमण महिमं काउं क्रामेण १०८ जावेण सिद्धा हवइ । चतुर्थोपवासेन यंत्रस्याग्रे स्मरणीया, नित्थारपारगो हवइ । उट्ठावणयोगे वा निविग्घो उत्तमठ्ठं आराहेइ, । सूरो संगामे अपराजिओ हवइ । विद्याविधानकथितं सुहमसामिगणहरेण वर्धमानयंत्रः कथितः १२ ।

ॐ नमो अरिहंताणं । ॐ नमो सिद्धाणं । ॐ नमो आयरियाणं । ॐ नमो उवज्झायाणं । ॐ नमो लोए सव्वसाहूणं । ॐ नमो आगासगामीणं । ॐ हः क्षः नमः श्रुविविद्या । ॐ नमो अरिहंताणं ह्रीँ हृदये इत्यादि, पाश्चात्य आत्मरक्षा अत्र स्थाने लिख्यते । ॐ ह्रीँ नमोस्तु भगवन् वर्धमानस्वामिन् ऐह्येहि संवोषट् आह्वानं १ । ॐ ह्रीँ नमोस्तु भगवन् वर्धमानस्वामिन् तिष्ठ तिष्ठ ठः ठः स्वाहा, स्थापनं २। ॐ ह्रीँ नमोस्तु भगवन् वर्धमानस्वामिन् मम सन्निहितो भव वषट्, सन्निधानं ३ । ॐ ह्रीँ नमोस्तु भगवन् वर्धमानस्वामिन् पूजान्तं यावत् अत्र स्थातव्यं, सन्निरोधः ४ । ॐ ह्रीँ नमोस्तु भगवन् वर्धमानस्वामिन् परेषामदृश्यो भव, अवगुंठनं, छोटिका ५ ॥ ॐ ह्रीँ नमोस्तु भगवन् वर्धमानस्वामिन् गंधादीन् गृण्ह गृण्ह नमः, कामधेनु मुद्रा ६ । ततः पंचसु महावीर कल्याणेषु प्रत्येकं चतुर्थं कृत्वा सहस्रमेकं वीरप्रतिमाग्रे जपेत् महाविद्या या वार २१ । चंदनमभिमंत्र्य दक्षिणकर्ण खरंटयेत्, ततोऽष्टोत्तरशतं जपेत् । ॐ वीर इत्यादि महाविद्यां वार २१ चंदनभिमंत्र्य कर्णं

यामेतरं खरंटयेत्, ततोऽसोभरशमंत्रयंत्र जपेत्। उपदेशस्य विषये १३। ॐ नमो भगवओ महइ महावीर वद्धमाणसामिस्स सिज्झउ मे भगवइ महइ महाविद्या। वीरे महावीरे जयवीरे सेणवीरे वद्धमाण (वीरे), श्रीपर्णीपत्रे प्रधान श्रीखंडेन...वीरे जए जयंतिए अपराजिए अणिहए मा चल चल वृद्धिर्देव ह्रीँ सः स्वाहाः शुचिभिः कृतोपवासे अष्टोत्तरं सहस्रं १००८ अखंड शवनिपट्टे गोशिर्षचंदनेन लिखित्वा पट्टे वा कुंकुमाद्यैर्लिखित्वा जातिकुसुमैः पूजयेत्। श्वेताक्षतैर्वा पूजयेत् विद्यामिमां, ततः सिद्धो भवति। वार सप्ताभिर्मंत्रितै वासैः श्रावकस्य शिरसि क्षिप्तैः तपोनिर्वाहो भवति, व्याख्याने विवादे जयो भवति नात्र संशयः ॥ १४ ॥

ॐ ह्रीँ नमो अरिहं० इत्यादि पद ५, ॐ नमो भगवओ अरहओ महावीरस्स सिज्झउ मे भगवइ महइ महाविद्या वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जए जयंते अपराजिए अणिहए मा चल चल सिद्धिदे ॐ ह्रीं स्वाहा ॥ एषा वर्द्धमानविद्या सर्वकार्यकरी अक्षर ३१ नंदि अक्षर ३४ सौभाग्यदं पदं अक्षर २ बीजपदं अक्षर २ समाप्तिपदं होमपदं वा ४ एवं अक्षर ६९ इति मंत्रशुद्धिः ॥

श्वेतध्यानेन कर्मक्षयः। शान्तौ च वीरे इत्यादि बीजपदानि। कनकपीत ध्यानेन सौभाग्यार्थं अतएव सौभाग्यविद्याम-ध्यात् श्री वज्रस्वामिना उद्धृतानि सौभाग्यपदानि पीतध्याने, ये ऋद्धये सौभाग्याय च ओँ। नीलध्यानेन ह्रीँ। रसाध्यानेन वशीकरणे स्वाहा। होम वास क्षेपे होमद्रव्याणि। महावीर कल्याणके उत्तराफाल्गुन्यां स्वातौ च उपवासं कृत्वा वर्धमानविद्यां सहस्रं [अष्टोत्तरं] १००८ जपेत् ततः सिध्यति। ततः शतपत्रिकापुष्प १०८, तंदूल १०८, उभयेषामपि जाप १०८ पृथक् पृथक् दिने २१ यावत्। ततो द्वयेषामपि चूर्णं कृत्वा आदौ क्षीरवृक्षे वासक्षेपः क्रियते। नतस्ते वासा यस्य शिरसि क्षिप्यंते

स वश्यो भवति । तथा वर्धमानविद्या ग्रामप्रवेशे वार २१ जपित्वा प्रवेष्टव्यं सर्वं भव्यं पूजालाभश्च भवति ॥ १५ ॥

ॐ ह्रीँ श्रीँ जीँ ड्रीँ कलिकुंडे कलिकुडदंडे देवदत्तस्यापातरक्षणाऽप्रतिहतचक्रे ॐ हाँ वीरे वीरे जयवीरे सेणवीरे वद्ध-माणवीरे जयंते अपराजिए अणिहए स्वाहा वीर २१–१०८ सर्वकायेषु अभिमंत्र्याक्षता ग्रंथौ बध्यन्ते सर्वे प्रणता भवन्ति । आम्नायान्तरे—

ॐ नमो भगवओ अरहओ इत्यादि यावत् अणिहए मा चल चल वृद्धिदे ह्रॉ ह्रीँ स्वाहा । अस्मिन् आम्नाये श्लोकं २, अक्षर १५, चतुर्थेन साध्यते । व्रतदानोत्थापना गणियोग प्रतिष्ठोत्तमार्थप्रतिपत्त्यादि शुभ प्रयोजनेषु सप्तवार जपित गंध-निक्षेपे नित्थारपारगं होइ । पूयासक्कारादि होय । ॐ ह्रीँ अ सि आ उ सा नमः, त्रिकालं १०८ जापः। प्रतिदिनं उपाध्याय-वाचनाचार्ययोर्लघुमंत्रः । १६ । ॐ नमो भगवओ महइ महावीर वद्धमाणसामिस्स सिजझउ मे भगवइ महइ महावीर विद्या वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जये विजये जयंते अपराजिए स्वाहा । प्रातरवश्यं वार ८–२१–१०८ स्मृत्वा भुंजित । एतत्प्रभावात् सौभाग्यमापदांनाशो राज्यपूज्यः श्रीयांपतिः दीर्घायुः शाकिनीरक्षा सुगतिः स्याद् भवान्तरे ॥ १७ ॥

ॐ नमो चउवीसाए तित्थंकराणां, ॐ नमो तित्थस्स, ॐ नमो सुयदेवइ भगवइए, ॐ नमो सुयकेवलीणं, ॐ ॐ नमो सवसाहूणं ॐ नमो सव्वसिद्धाणं, ॐ नमो अरहओ भगवओ सिज्झ उ मे भगवइ महइ महाविज्झा वीरे वीरे जयवीरे सेणवीरे वद्धमाणवीरे जयंते अजिए अ महावीरे अ पराजिए स्वाहा । वद्धमाणविद्या चउत्थं काउण जवियवा वार १०८

कार्यकाले वार २१–७। तथा गोरोचन चंदन केसर जातिफल कर्पूर कस्तूरिका एतत् चूर्णं क्रियते। अनुकूले चंद्रे प्रीतौ सौभाग्ये वा वा योगे अभिमंत्र्यते। तच्चूर्णं ग्रंथौ बध्वा ध्रियते वासाक्षतयोर्मध्ये। तच्चूर्णमध्यात् कणमेकं प्रक्षिप्यते यस्य शिरसि दीयते स वशीभवति नीरोगश्च। अथवा–वार १०८ अभिमंत्र्य तिलकं कृत्वा हृदये वा राजकुलादौ गम्यते, राजा अनुकूलो भवति कार्यकारी च नान्यथा।

ॐ नमो जिणाणं। ॐ नमो ओहिजिणाणं। ॐ नमो परमोहि जिणाणं। ॐ नमो सव्वोसहि जिणाणं। ॐ नमो अणंतोसहिजिणाणं (पाठांतरे) अणंतोहि जिणाणं। ॐ नमो केवलिजिणाणं। ॐ नमो कुट्ठबुद्धीणं। ॐ नमो बीयबुद्धीणं। ॐ नमो पयाणुसारीणं। ॐ नमो संभिन्नसोइणं। ॐ नमो उज्जुमइणं। ॐ नमो विउलमइणं। ॐ नमो महामइणं। ॐ नमो चउदसपुव्वीणं। ॐ नमो अट्ठंगमहानिमित्तकुसलाणं। ॐ नमो विउव्वइड्ढिपत्ताणं। ॐ नमो आगासगामीणं। ॐ ह्रूँ ऍं श्रीँ ह्रीँ धृति कान्ति बुद्धि लक्ष्मी स्वाहा। अस्य मंत्रस्य क्रिया–स्वापकाले हस्तपादान् प्रक्षाल्य प्रधान श्री खंडेन कर्पूरमिश्रितेन आत्मशरीरे भूहरिकृत्वा एकान्ते संस्तारके उपविश्य कर्णौ वार १०८ जपित्वा मौनं कृत्वा कार्यं चिंतनीयं स्वप्तव्यं, ततः स्वप्ने शुभाशुभं कथयति, नात्र संदेहः कार्यः, किंतु भक्तिबहुमानेन सदा पूजनीया जातिपुष्पैः। सहस्र (द्वादश) १२००० जापः। कर्पूरागरु कस्तूरिका प्रभृतिभिर्भोगः इति प्राक्सेवा।

ॐ नमो वीरे वीरे विजये अतुलबलपराक्रमे भगवइ वीरे जये वीरे सेणवीरे वद्धमाणवीरे जयंते अपराजिए ॐ इलि इलि मिलि किलि किलि पिरि पिरि सिरि सिरि ॐ वीरे विजयी महाविज्जा सव्वदुट्ठसंमोहणी सव्वदुट्ठसंखोहिणी सव्वदुट्ठघोहिणी

सव्वदुट्ठ जंभिणी थंभिणी अमुकं भंज भंज थंभ थंभ ठः ठः ठः । ॐ जयः वीरे विजयी स्वाहा, सदा ध्येया ७–२१। ॐ नमो भगवओ अरहओ सिज्झउ मे भगवइ महइ महाविज्ञा अहिआइए अपराजइएमहइए अपराजइए एणइए वद्धमाणइए जइए आछइए अपराजइए आह आ स्वाहा। उववासो चउविहारभत्ते हो जावोत्थ पूवसेवाए अट्ठोत्तरसहस्सं १००८ वार ३–७–२१। वासा अहिवासिज्ञंति

ॐ ऐं ह्रीं नमो वर्धमानस्वामिनी महाविद्ये मम शान्ति कुरु कुरु, पुष्टिं कुरु कुरु, हृष्टिं कुरु कुरु, जीवरक्षां च कुरु कुरु, हूॅ क्ष्वं जंभे मोहे ह्रं फुट् ठः ठः ठः ठः ठः बलिं गृण्ह गृण्ह, धूपं गृण्ह गृण्ह, पुष्पान् गृण्ह गृण्ह, नैवेद्यं गृण्ह गृण्ह, नानाविधबलि गृण्ह गृण्ह सर्वरोगं हर हर ब्रॉं ब्रीँ ब्रू ब्रः वर्धमानस्वामिने स्वाहा, (इति) बृहद्वर्धमानविद्या।

ॐ नमो भगवओ महइ महाविद्या वीरस्स सिज्झसिज्झउ मे लहुं भवइ महइ महाविज्ञा वीरे सुवीरे जयवीरे सेणवीरे वद्धमाणवीरे जये अपराजिते स्वाहा। उत्तराफाल्गुन्यां उपवासो, जातिकुसुमैः वर्धमानजिनस्याग्रेऽच्चर्या कृत्वा सहस्रं जपेत्। उत्तरकालं शुचिर्भूत्वा एकविंशति वारान् मुखमभिमंत्र्य यत्र व्रजेत् तत्र सर्वजन प्रियो भवति। १। कोष्ठागारे बीजमभि मंत्र्यानयैव विद्यया निक्षेपे वर्धते, परमुपोषितः स यथा किल नयसोत्तपवाहिय सियरासणि लवलिक्कमूलक यगद्भौसणवर पवईज्ञतो वि धणरासीननिट्ठेन् ॥ २ ॥ मुखं कर्णं चाभिमंत्र्य स्वपिति स्वप्ने शुभाशुभं कथयति ॥ ३ ॥ अनयात्मानमभिमंत्र्य सर्वान् भोजयति इत्यस्य पंच व्युघ्रयः। वादे द्यूते च पराजितो भवति, गौतमवाक्यं।

ॐ नमो वद्धमाण सिधुलेभयवदेवीरेस्समहावीर सुवीरे अजिते अपराजिते स्वाहा वर्धमानपुर, उत्तरातः पूर्वफाल्गुन्युत्तरा-

फाल्गुन्यामुपवासंकृत्वा जातिपुष्पै १००८ जाप, वार २१ कर्णमभिमंत्र्य सुप्यते रात्रौ जीवितमरणं कथयति। ॐ नमो भगवओ अरहओ सिज्झउ लहु भयवइ महइ महाविज्जा वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जयंते अपराजिए स्वाहा। महानिशिथे २४ छे अपि सर्व कार्ये तु मंडलविधिः पटादेवावसेयः ।

ॐ नमो महाबले महाविज्जे अप्रतिहतशासने महाक्षुद्रविनाशिनी दुष्टविद्रावणी ह्रीँ विजये स्वाहा । उपवासं कृत्वा श्री महावीर निर्वाण समये जातिकुसुमैरक्षतै वार १०८ इयं विद्या जप्ता साध्यते कार्यकाले युगफलं पत्रं वार १०८ अभिमंत्र्य दिनत्रयं दीयते, दौषनिग्रहः। उपशान्ते शान्तिप्रदे सर्वजगज्जीवहिते शान्तिकरे ॐ ह्रीँ सर्वभयं प्रशामय प्रशामय, भगवति शान्तिदेवते[1] अस्माकं सपरिवाराणां शान्तिं कुरु कुरु, ॐ ह्रॉ ह्रीँ हं शान्तये स्वाहा। उपवासं कृत्वा जातिपुष्पैरक्षतैर्वा पूर्वसेवा १००८, कार्ये १०८, शान्तिर्भवति ।

ऑँ ह्रॉ कर्णे विकर्णेश्वरि मम चिंतिते कार्ये शुभाशुभं कथय कथय स्वाहा। आदेशविषये ॥ इति श्री वर्धमानविद्याकल्पः ॥ सं० १८८१ मिति आसो शुदि ७ समाप्त. ॥

**इति श्री वर्धमानाविद्याकल्पः समाप्तः**

१. बृहत्सूरिमन्त्रकल्पे तु शांतिदेवताया पिरि संज्ञेति नाम दर्शितं ॥

॥ ॐ ॥

અમદાવાદ-આપડાની પોળ-નિવાસી

**શેઠ મોહનલાલ છોટાલાલ તરફથી**

તેમના ધર્મપત્ની

**માણેકબાઇએ**

નવપદજીની ઓળી

જ્ઞાન પંચમી, મૌન એકાદશી. વીશ-સ્થાનક અને રોહિણીના તપ કરેલા

卐 તે નિમિત્તે કરેલા ઉજમણામાં 卐

જ્ઞાનભક્તિ નિમિત્તે આ પુસ્તક સ્થાપન કરવામાં આવેલ છે વિક્રમ સં. ૧૯૮૫